॥ श्रीशिवस्तोत्रं असितकृत ॥

श्रीगणेशाय नमः ॥

असित उवाच ।

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च ।
योगीन्द्राणां च योगीन्द्र गुरूणां गुरवे नमः ॥ १॥

मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखण्डन
मृत्योरीश मृत्युबीज मृत्युञ्जय नमोस्तु ते ॥ २॥

कालरूपं कलयतां कालकालेश कारण ।
कालादतीत कालस्थ कालकाल नमोस्तु ते ॥ ३॥

गुणातीत गुणाधार गुणबीज गुणात्मक ।
गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥ ४॥

ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्परः ।
ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोस्तु ते ॥ ५॥

इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः ।
दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥ ६॥

असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
वर्षमेकं हविष्याशी शङ्करस्य महात्मनः ॥ ७॥

स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम् ।
भवेद्धनाढ्यो दुःखी च मूको भवति पण्डितः ॥ ८॥

अभार्यो लभते भार्यां सुशीलां च पतिव्रताम् ।
इह लोके सुखं भुक्त्वा यात्यन्ते शिवसन्निधिम् ॥ ९॥

इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे ।
प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥ १०॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
असितकृतशिवस्तोत्रं सम्पूर्णम् ॥

॥ उपमन्युकृतशिवस्तोत्रम् ॥

श्रीगणेशाय नमः ।

जय शङ्कर पार्वतीपते मृड शम्भो शशिखण्डमण्डन ।
मदनान्तक भक्तवत्सल प्रियकैलास दयासुधाम्बुधे ॥ १॥

सदुपायकथास्वपण्डितो हृदये दुःखशरेण खण्डितः ।
शशिखण्डशिखण्डमण्डनं शरणं यामि शरण्यमीश्वरम् ॥ २॥

महतः परितः प्रसर्पतस्तमसो दर्शनभेदिनो भिदे ।
दिननाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः ॥ ३॥

न वयं तव चर्मचक्षुषा पदवीमप्युपवीक्षितुं क्षमाः ।
कृपयाऽभयदेन चक्षुषा सकलेनेश विलोकयाशु नः ॥ ४॥

त्वदनुस्मृतिरेव पावनी स्तुतियुक्ता न हि वक्तुमीश सा ।
मधुरं हि पयः स्वभावतो ननु किद्दक्सितशर्करान्वितम् ॥ ५॥

सविषोऽप्यमृतायते भवाञ्छवमुण्डाभरणोऽपि पावनः ।
भव एव भवान्तकः सतां समदृष्टिर्विषमेक्षणोऽपि सन् ॥ ६॥

अपि शूलधरो सतां निरामयो दृढवैराग्यरतोऽपि रागवान् ।
अपि भैक्ष्यचरो महेश्वरश्चरितं चित्रमिदं हि ते प्रभो ॥ ७॥

वितरत्यभिवाञ्छितं दृशा परिदृष्टः किल कल्पपादपः ।
हृदये स्मृत एव धीमते नमतेऽभीष्टफलप्रदो भवान् ॥ ८॥

सहसैव भुजङ्गपाशवान्विनिगृह्णाति न यावदन्तकः ।
अभयं कुरु तावदाशु मे गतजीवस्य पुनः किमौषधैः ॥ ९॥

सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम् ।
अमृतैरिव संभ्रमेण मामभिषिञ्चाशु दयावलोकनैः ॥ १०॥

मुनयो बहवोऽद्य धन्यतां गमिता स्वाभिमतार्थदर्शिनः ।
करुणाकर येन तेन मामवसन्नं ननु पश्य चक्षुषा ॥ ११॥

प्रणमाम्यथ यामि चापरं शरणं कं कृपणाभयप्रदम् ।

विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत् ॥ १२॥

बहवो भवताऽनुकम्पिताः किमितीशान न मानुकम्पसे ।
दधता किमु मन्दराचलं परमाणुः कमठेन दुर्धरः ॥१३॥

अशुचिं यदि मानुमन्यसे किमिदं मूर्ध्नि कपालदाम ते ।
उत शाठ्यमसाधुसङ्गिनं विषलक्ष्मासि न किं द्विजिह्वधृक्॥ १४॥

क्व दृशं विदधामि किं करोम्यनुतिष्ठामि कथं भयाकुलः ।
क्व नु तिष्ठसि रक्ष रक्ष मामयि शम्भो शरणागतोऽस्मि ते ॥ १५॥

विलुठाम्यवनौ किमाकुलः किमुरो हन्मि शिरश्छिनद्मि वा ।
किमु रोदिमि रारटीमि किं कृपणं मां न यदीक्षसे प्रभो ॥ १६॥

शिव सर्वग शर्व शर्मदं प्रणतो देव दयां कुरुष्व मे ।
नम ईश्वर नाथ दिक्पते पुनरेवेश नमो नमोऽस्तु ते ॥ १७॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ १८॥

उपमन्युकृतं स्तवोत्तमं जपतः शम्भुसमीपवर्तिनः ।
अभिवाञ्छितभाग्यसम्पदः परमायुः प्रददाति शङ्करः ॥ १९॥

उपमन्युकृतं स्तवोत्तमं प्रजपेद्यस्तु शिवस्य सन्निधौ ।
शिवलोकमवाप्य सोऽचिरात्सह तेनैव शिवेन मोदते ॥ २०॥

इत्युपमन्युकृतं शिवस्तोत्रं सम्पूर्णम् ।

॥ श्रीशिवस्तोत्रं कल्किकृतम् ॥

श्रीगणेशाय नमः ।
गौरीनाथं विश्वनाथं शरण्यं भूतावासं वासुकीकण्ठभूषम् ।
त्र्यक्षं पञ्चास्यादिदेवं पुराणं वन्दे सान्द्रानन्दसन्दोहदक्षम् ॥ १॥

योगाधीशं कामनाशं करालं गङ्गासङ्गक्लिन्नमूर्धानमीशम् ।
जटाजूटाटोपरिक्षिप्तभावं महाकालं चन्द्रभालं नमामि ॥ २॥

श्मशानस्थं भूतवेतालसङ्गं नानाशस्त्रैः सङ्गशूलादिभिश्च ।
व्यग्रात्युग्रा बाहवो लोकनाशे यस्य क्रोधोद्भूतलोकोऽस्तमेति ॥ ३॥

यो भूतादिः पञ्चभूतैः सिसृक्षुस्तन्मात्रात्मा कालकर्मस्वभावैः ।
प्रहृत्येदं प्राप्य जीवत्वमीशो ब्रह्मानन्दे क्रीडते तं नमामि ॥ ४॥

स्थितौ विष्णुः सर्वजिष्णुः सुरात्मा लोकान्साधून् धर्मसेतून्बिभर्ति ।
ब्रह्माद्यंशे योऽभिमानी गुणात्मा शब्दाद्यङ्गैस्तं परेशं नमामि ॥ ५॥

यस्याज्ञया वायवो वान्ति लोके ज्वलत्यग्निः सविता याति तप्यन् ।
शीतांशुः खे तारकासंग्रहश्च प्रवर्तन्ते तं परेशं प्रपद्ये ॥ ६॥

यस्य श्वासात्सर्वधात्री धरित्री देवो वर्षत्यम्बुकालः प्रमाता ।
मेरुर्मध्ये भूवनानां च भर्ता तमीशानं विश्वरूपं नमामि ॥ ७॥

इति श्रीकल्किपुराणे कल्किकृतं शिवस्तोत्रं सम्पूर्णम् ।

दारिद्र्य दहन शिवस्तोत्रम्

विश्वेश्वराय नरकार्णव तारणाय कर्णामृताय शशिशेखरधारणाय ।
कर्पूरकान्तिधवलाय जटाधराय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ १॥

गौरीप्रियाय रजनीशकलाधराय कालान्तकाय भुजगाधिपकङ्कणाय ।
गंगाधराय गजराजविमर्दनाय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ २॥

भक्तिप्रियाय भवरोगभयापहाय उग्राय दुर्गभवसागरतारणाय ।
ज्योतिर्मयाय गुणनामसुनृत्यकाय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ३॥

चर्मम्बराय शवभस्मविलेपनाय भालेक्षणाय मणिकुण्डलमण्डिताय ।
मंझीरपादयुगलाय जटाधराय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ४॥

पञ्चाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमण्डिताय ।
आनन्दभूमिवरदाय तमोमयाय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ५॥

भानुप्रियाय भवसागरतारणाय कालान्तकाय कमलासनपूजिताय ।
नेत्रत्रयाय शुभलक्षण लक्षिताय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ६॥

रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नरकार्णवतारणाय ।
पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ७॥

मुक्तेश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय ।
मातङ्गचर्मवसनाय महेश्वराय दारिद्र्य दुःखदहनाय नमः शिवाय ॥ ८॥

वसिष्ठेन कृतं स्तोत्रं सर्वरोगनिवारणं ।
सर्वसम्पत्करं शीघ्रं पुत्रपौत्रादिवर्धनम् ।
त्रिसंध्यं यः पठेन्नित्यं स हि स्वर्गमवाप्नुयात् ॥ ९॥

॥ इति श्रीवसिष्ठविरचितं दारिद्र्यदहनशिवस्तोत्रं सम्पूर्णम् ॥

॥ भृङ्गिकृतशिवस्तोत्रं शिवरहस्ये ॥

स्कन्दः -
हृष्टां देवीं तदा वीक्ष्य भृङ्गिः साम्बं महेश्वरम् ।
तुष्टाव देव्या देवेशं स भृङ्गी विनयात् सदा ॥ १॥

भृङ्गी -
क्रूरं दुष्टं विनष्टमनसं भ्रष्टं शठं निष्ठुरं
निर्लज्जं कृपणं कृतघ्नशुचिं बह्वाशनं हिंसकम् ।
आशापाशशतप्रबन्धमनसं दुष्कीर्तिभाजं जडं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २॥

क्षुद्रं दुर्भगमल्पसत्वमलसं भग्नव्रतं रागिणं
भीरुं डांभिकपक्षमं व्यसनिनं पापात्मकं सूचकम् ।
आधिव्याधिनिपीडितं जडधियं सद्भिः सदा निन्दितं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३॥

मूर्खं बालमतिं स्वधर्मरहितं धर्मार्थहीनं खलं
कामान्धं क्षणिकं तदर्थनपरं दौःशील्यजन्मस्थलम् ।
सर्वलुब्धमसत्यनिष्ठमधमं प्रज्ञायशोवर्जितं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४॥

आकाङ्क्षाशयमार्यवृत्तिविमुखं क्षीणं गुरुद्वेषिणं
धूर्तं दुर्गुणमत्यशुद्धहृदयं सर्वत्र सन्देहिनम् ।
दीनं पापरतं समस्तविषयेष्वासक्तमन्यायिने
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ५॥

स्वप्नेऽप्युत्तमगन्धपुष्पनिकरैरीशार्चनावर्जितं
धयानध्येयविचारणाविरहितं तुच्छं सदोच्छृङ्खलम् ।
दारिद्र्यास्पदमात्मवैरिवशगं तापत्रयस्यास्पदं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ६॥

मायाग्रस्तसमस्तवृत्तिकुशलं सत्सङ्गविद्वेषिणं
दुःसङ्गप्रियमप्रतिष्ठववनं कामातुरं तस्करम् ।
शैवज्ञानपराङ्गमुखं खलजनव्यापारपारं गतं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ७॥

दुर्मर्यादमतिप्रवृद्धजरसं सद्वृत्तिसेवारिपुं

सद्धर्मादिसमुत्सुके गुरुजने मान्येषु चात्युद्धतम् ।
शिष्टानिष्टकरं क्रियापरिचितं दुष्टप्रतुष्टिपदं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ८॥

कर्मादिस्तुतिकारणं परमहानिन्दाकरं निन्दितं लुण्टाकं
पतितं विपर्ययगतस्वान्तं सदा याचकम् ।
वैकल्यापगतं सुकार्यनिचयं सर्वापदां संचयं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ९॥

कृत्याकृत्यविचारवर्जितमतिं व्रात्यं महाकातरं
दुर्बुद्धिं मदपानमत्सरधियं दुर्वृत्तवृत्त्याश्रयम् ।
मिथ्याज्ञानिनमात्मात्मकण्टकमलं लोकत्रये निन्दितं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १०॥

दुष्कर्मप्रचयप्रभिन्नहृदयं क्लेशैश्च सम्पिडितं
चार्वाकं कुमतिं कुशीलमनसं कार्पण्यजन्मस्थलम् ।
भार्यापुत्रगृहादिसक्तमनसं गांभिर्यधैर्यद्विषं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ११॥

आत्मज्ञानविहीनमात्मविमुखं सर्वात्मभावद्विषं
संकल्पैर्बहुभिर्विभिन्नहृदयं द्वैतप्रसक्तं सदा
मर्मच्छिद्वचनं कठोरहृदयं मित्रद्रुहं क्षुद्रकं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १२॥

चित्तक्षोभकरं कलत्रहृदयं शङ्कापदं लोलुपं
सारासारविचारहिनमनसं नीचक्रियं नीरसम् ।
मत्तोन्मत्तनिकृष्टदुष्टचरितं शोच्यं वृथालापिनं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १३॥

सत्यत्यागदयाक्षमाशमदमाद्यर्थानभिज्ञानकं
देवब्राह्मणगोत्रजातितिथिपितृज्ञानात्मकापूजनम् ।
विश्वस्तेष्वपकारवञ्चनपरैर्मैत्रीपरं दुर्जयं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १४॥

मत्वाऽधर्ममतिं कदर्थनपरं को मत्समोऽस्मिन्
भवेदित्येवं बहुजल्पिनं कुत्रपुषं पापाश्रितं राक्षसम् ।
दृष्ट्वा दृष्टसुखेषणं तव मदात् त्यक्त्वा शिवाराधनं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १५॥

दुष्पूरस्वककुक्षिपूरणपरं भारं भुवः केवलं
दासीमेषखरस्वभावमपटुं संमाननाभाजनम् ।
रिक्तं बालमदीर्घसुत्रिणमलं हृच्छल्यभूतं सतां
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १६॥

मार्जाराखुवृकश्वकुक्कुटकपिक्रोडाभिवृत्तिं सदा
तीर्थध्वांक्षमनर्थकम्पिनि हिते सन्तापिनं दुःसहम् ।
त्यक्तोपायमपायकांक्षिणमहोऽशुद्धप्रियं चापलं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १७॥

अस्पृश्यं विकलं कर्दयमखिलैः दोषैः स्वकिर्यैतं
पापिष्ठं विषयेषु सक्तमनसं त्याज्यं विवादास्पदम् ।
चिन्ताशोकपरीतचेतसमलं सर्वाशुभानां पदं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १८॥

अत्यावेशनमुत्तमस्थितिमतां सत्याग्निनां नास्तिकं
रन्ध्रान्वेषणमन्धमूकबधिरं शंभोस्तु विश्वात्मनः ।
माहात्म्यश्रवणस्तुतिक्षणविधौ माहेश्वरावत्सलं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ १९॥

भ्रष्टं सर्वजुगुप्सितं परहितव्याघातिनं तामसं संभ्रान्तं
चपलं विचारविहितव्यापारविद्वेषणम् ।
शंभो त्वत्पदभक्तिहीनमनसं मूढं समात्मद्विषं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २०॥

दोषावासमतिं प्रमादितमतिं क्षुत्तुड्ज्वराभ्यर्दितं
स्वप्नेऽप्यत्र परोपकाररहितं सर्वाहितं दुर्बलम् ।
लोके सत्परिहार्यनिन्दितमहादुःखप्रदैकेन्द्रियं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २१॥

किं वाचा बहुविस्तरेण भगवन् मत्सन्निभो भूतले
भूतो नास्ति विभो भविष्यति पुमान् निर्भाग्यचूडामणिः ।
तस्मादीदृशमात्मवंचनपरं त्रैलोक्यरक्षामणे
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २२॥

सर्वश्रेष्ठगुणैकभाजनमहो सर्वोत्तमेषूतं
संख्येपार्थगुणैकभाजनमलं कष्टातिकष्टप्रियम् ।

श्रीकाश्रीकमतेन्द्रियस्य वशगं निःसंशयं सङ्गिनं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २३॥

विण्मूत्रक्रिमिमांसशोणितमयं मेदोऽस्थिमज्जात्मकं
दुर्गन्धैकनिधिं जरापरिगतं वातादिदोषास्पदम् ।
दृष्ट्वाऽपि स्वकलेवरं कृशमयं तवारिक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २४॥

विष्टाविष्टकुजन्तुनिष्ठमशुचिं स्वाभाव्यतो नश्वरं
कुष्ठक्षौण्यविषूचिकाज्वरशिरः शूलादिवेगास्पदम् ।
ज्ञात्वाऽपि स्वशरीरमत्र तु सदा सम्प्रीतियुक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २५॥

स्वात्माधारतया स्थितां निजतनुं बाल्ये तथा यौवने
वृद्धत्वेऽपि बहुप्रकारविकृतिं प्राप्तां समिक्ष्यापि च ।
तत्रात्मन्यतिरागिणं त्वयि कृते स्वान्यानुरक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २६॥

देहं क्षालनलेपनादिविधिना संस्पृश्य योग्यार्थवत्
छिन्नं क्लिन्नमहाव्रणं नवमुखं नित्यं स्रवन्तं मलम् ।
तं दृष्ट्वाऽप्यतिरागिणं च नरके नूनं सरागं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २७॥

लोकेऽत्यन्तपवित्रतामुपगतं यत् पञ्चगव्यादिकं
तद्देहोत्थकफास्थिरोमरुधिरस्नाय्वादिसंस्पर्शतः ।
स्यादेवाशुचि तद्विबुध्य च सदा तद्देहसक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २८॥

स्वस्यायुर्निचयस्य मध्यत इमौ नित्यं निशावासरौ
जाग्रत्स्वप्नसुषुप्तिषु स्थितिमतः स्वल्पायुषः खण्डकं ।
गच्छत् तावदबुद्धय च स्वहितसत्कर्मण्यरक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २९॥

सर्पिः खण्डपयोमधुप्रभृतिकं त्यक्तवा तृणान्यपि गौः
यद्वत् शाश्वतशांभवोक्तमहिमानन्दान्पेक्षं सदा ।
शंभो वैषयिके सुखेऽतिविरसे तुच्छेऽतिसक्तं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३०॥

धूमे कुंकुमगन्धकांक्षिणमहो तोयार्थिनं वा मरौ
तैलान्वेषिणमश्वचूत्णनिचये मैत्र्यर्थिनं दुर्जने ।
दुर्बुद्धीं त्रिगुणात्मके मलनिधौ क्षेत्रे सुखेप्सुं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३१॥

देवानामपि मारुतस्य च विभो गम्यं न यत् तत्र तु
स्वैरं गच्छति मे मनो नहि तदा चित्तं तवांघ्रिद्वये ।
धर्तुस्तच्च नियन्तुमुच्चसुखदो नैर्वासमर्थं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३२॥

वेदैरप्यखिलैर्महेश बहुशो वेदान्तशास्त्रादिभिः
व्यापि चिन्मय एक ईश्वर इति प्रोक्ते त्वयि त्वत्पदे ।
चित्तं धर्तुमशक्तमात्मवचनैः व्यापारहीनं पशुं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३३॥

ज्ञानाज्ञानदयादयाशमदमासंमोहमोहानतिख्यात्यख्याति
भयाभयासुखसुखाहिंसामनस्तुष्टयः ।
भूतनां भवदाज्ञयैव विधिना नित्यं भवन्ति ध्रुवं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३४॥

भावाभावभवाभवामृतविषसत्सत्समस्ता क्रिया
दिव्यत्वं च निरामयत्वनिखिलाभीष्टार्थसम्पत्तयः ।
भूतानां भवदिच्छयैव भगवन् जायन्त एवानिशं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३५॥

योगैश्वर्यसमस्तदानपरता श्रद्धात्मभक्तिर्दृढा
वैराग्यं परमं महेश परमे धर्मे मतिश्चारुता ।
भूतानां भवतः प्रसादत इमे जायन्त एव ध्रुवं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३६॥

नालं चालयितुं तृणं च पवनः शंभो त्वदाज्ञां विना
दग्धुं तं न समर्थ एव हुतभुक् शक्रोऽपि नो व्रजतः ।
शक्तः छेत्तुमपि प्रभो जगदिदं सर्वं त्वदाज्ञावशं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३७॥

चित्तं चेतयते मनश्च सकलं संकल्पयत्याज्ञया
सर्वार्थानभिमन्यते ननु महादेवाज्ञयाऽहंकृतिः ।
स्वे स्वे त्विन्द्रियवर्ग एव विषयेच्छास्ते तवैवाज्ञया

कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३८॥

ब्रह्मा सृष्टिकरो हरिः स्थितिकरो रुद्रस्तु कालात्मकः
संहर्ता जगतं श्रियं जनयति श्रीयुग्मविद्यां पुमान् ।
गायत्री च तवाज्ञयैव नरकात् सन्तारयत्याश्रितान्
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ३९॥

वायुर्वाति तवाज्ञया शशिरवी नित्यं जगद्भासकौ
आहारं पचते च कुक्षिसदने वह्निः सद प्राणिनाम् ।
देवानां वहतीव हव्यमऽपि यः पाकं करोत्यत्ति यः
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४०॥

भूतान्याप इहाज्ञयैव भवतः संजीवयन्ति प्रभो वाचा
वाग् विपुलं ददाति जगतां यत्तेखिलं पुंनभः ।
भूतानामवकाशदं त्रिजगतां शीतोष्णशङ्कास्पदः
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४१॥

सेन्द्राः सर्वसुरासुरादय इह त्वच्छासने संस्थिताः
ब्रह्माण्डानि इहात्मवस्तुनि परे सन्धारकाः सन्ततम् ।
त्रैलोक्यानुगतानपीह सुबहून्याज्ञावशादेव ते
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४२॥

हर्तासौ महदादिकं प्रकृतिरप्याज्ञावशा ते विभो
कालश्च प्रकृतिः पुरुः पुरुष इत्येतत् त्रयं सर्वदा ।
शंभो देव भव त्वमेव च तथा भूतं भविष्यत् भवं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४३॥

त्वयोपरि तमो घृतं तव महाब्धिलीलार्थमेव
त्वयोन्नतिप्रेरणयैव ते तच्च विषयेष्वत्र प्रवृतं जगत् ।
तापश्चापि रवेः समस्तजगतां दुःखार्तिहारिन प्रोभो
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४४॥

बन्धच्छेदविधौ त्वमेव भुवनेष्वेकः समर्थो भवेः
त्वं पाशैर्भवबन्धमेतदखिलं कर्मच्छलेनापि च ।
शंभो त्वां शरणागतं करुणया त्वं शंकरो येन वा
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४५॥

महामुर्ते महादेव त्वन्मूर्तौ सर्वदेवताः ।

यथा बीजाङ्कुरोत्पत्तिः तथेदं त्वय्यवस्थितम् ॥ ४६॥

जगज्जालमिदं शम्भो ससुरासुरमानुषम् ।
नित्य निर्माय नीरूप धुरन्धर सुनिर्मलम् ॥ ४७॥

मनोवाचां सुदुरात्मन् परमेश नमोस्तु ते ।
त्वत्तः सर्वं त्वया सर्वं त्वं सर्वं सर्वगोऽसि च ॥ ४८॥

नमस्ते देवदेवेश सर्वकारणकारण ।
कर्तव्य च दया दिने करुणाकर शङ्कर ॥ ४९॥

सर्वापराधं मे देव क्षमस्व जगतां पते ।
तव रूपं जगच्छम्भो अष्टमूर्तिरनीश्वरः ॥ ५०॥

पिता त्वमेव भगवन् माता साक्षादुमा यतः ।
क्षमस्वागो ममेद नीं बहुनोक्तेन किं प्रभो ॥

त्वयि भक्तिं महादेव दृढां देहि मृडाव्यय ॥ ५२॥

स्कन्दः -
इत्युक्तां मुनिवचनस्तुतिं महेशः
श्रुत्वा चागकुमारिकायुतो हरस्तम् ।
दत्वा रूपमपारदिव्यगणपस्येन्द्राधिपत्यं ददौ
तेनैवोत्तमसद्द्विजेन विहरत् कैलासमौलौ शिवः ॥ ५३॥

यस्त्वेतच्छृणुयात पठेन शम्भोः
स्तव्यानां परमः स्तवोऽयमीशतुष्ट्यै ।
सोऽन्ते चाप्यचिरेण भृङ्गितुल्यः
पादाब्जे परमेश्वरस्य युक्तभृङ्गः ॥ ५४॥

॥ इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे
भृङ्गिकृतशिवस्तोत्रवर्णनं नाम दशमोऽध्यायः ॥

॥ श्रीशिवस्तोत्रम् - स्वामी विवेकानन्दविरचितम् ॥

ॐ नमः शिवाय ।

निखिलभुवनजन्मस्थमभङ्गप्ररोहाः
अकलितमहिमानः कल्पिता यत्र तस्मिन् ।
सुविमलगगनाभे ईशसंस्थेऽप्यनीशे
मम भवतु भवेऽस्मिन् भासुरो भावबन्धः ॥

निहतनिखिलमोहेऽधीशता यत्र रूढा
प्रकटितपरप्रेम्ना यो महादेव संज्ञः ।
अशिथिलपरिरम्भः प्रेमरूपस्य यस्य
प्रणयति हृदि विश्वं व्याजमात्रं विभुत्वम् ॥

वहति विपुलवातः पूर्व संस्काररूपः
प्रमथति बलवृंदं घूर्णितेवोर्मिमाला ।
प्रचलति खलु युग्मं युष्मदस्मत्प्रतीतम्
अतिविकलितरूपं नौमि चित्तं शिवस्थम् ॥

जनकजनितभावो वृत्तयः संस्कृताश्च
अगणनबहुरूपा यत्र एको यथार्थः ।
शमितविकृतवाते यत्र नांतर्बहिश्च
तमहह हरमौडे चित्तवृत्तेर्निरोधम् ॥

गलिततिमिरमालः शुभ्रतेजःप्रकाशः
धवलकमलशोभः ज्ञानपुञ्जाट्टहासः ।
यमिजनहृदिगम्यः निष्कलं ध्यायमानः
प्रणतमवतु मं सः मानसो राजहंसः ॥

दुरितदलनदक्षं दक्षजादत्तदोषम्
कलितकलिकलङ्कं कम्रकल्हारकांतम् ।
परहितकरणाय प्राणविच्छेदसूत्कम्
नतनयननियुक्तं नीलकंठं नमामः ॥

-- स्वामी विवेकानन्द

॥ श्रीशिवस्तोत्रं हिमालयकृत ब्रह्मवैवर्ते ॥

श्रीगणेशाय नमः ।

हिमालय उवाच ।

त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः ।
त्वं शिवः शिवदोऽनन्तः सर्वसंहारकः ॥ १॥

त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः ।
प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥ २॥

नानारूपविधाता त्वं भक्तानां ध्यानहेतवे ।
येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥ ३॥

सूर्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् ।
सोमस्त्वं सस्यपाता च सततं शीतरश्मिना ॥ ४॥

वायुस्त्वं वरुणस्त्वं च विद्वांश्च विदुषां गुरुः ।
मृत्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः ॥ ५॥

वेदस्त्वं वेदकर्ता च वेदवेदाङ्गपारगः ।
विदुषां जनकस्त्वं च विद्वांश्च विदुषां गुरुः ॥ ६॥

मन्त्रस्त्वं हि जपस्त्वं हि तपस्त्वं तत्फलप्रदः ।
वाक् त्वं रागाधिदेवी त्वं तत्कर्ता तद्गुरुः स्वयम् ॥ ७॥

अहो सरस्वतीबीजं कस्त्वा स्तोतुमिहेश्वरः ।
इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम् ॥ ८॥

तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः ।
स्तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ॥ ९॥

मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे ।
अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ॥ १०॥

भार्याहीनो लभेद्भार्यां सुशीलां सुमनोहराम् ।
चिरकालगतं वस्तु लभते सहसा ध्रुवम् ॥ ११॥

राज्यभ्रष्टो लभेद्राज्यं शङ्करस्य प्रसादतः ।
कारागारे श्मशाने च शत्रुग्रस्तेऽतिसङ्कटे ॥ १२॥

गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ।
रणमध्ये महाभीते हिंस्रजन्तुसमन्विते ॥ १३॥

सर्वतो मुच्यते स्तुत्वा शङ्करस्य प्रसादतः ॥ १४॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे
हिमालयकृतं शिवस्तोत्रम् ॥